॥ सूर्यस्तोत्रम् १ ॥

अथ सूर्यस्तोत्रप्रारम्भः ।
अस्य श्रीभगवत्सूर्यस्तोत्रमहामन्त्रस्य अगस्त्य ऋषिः । अनुष्टुप्छन्दः ।
श्रीसूर्यनारायणो देवता । सूं बीजम् ।
रिं शक्तिः । यं कीलकम् । सूर्यप्रसादसिद्ध्यर्थे जपे विनियोगः ।

आदित्याय अङ्गुष्ठाभ्यां नमः । अर्काय तर्जनीभ्यां नमः ।
दिवाकराय मध्यमाभ्यां नमः । प्रभाकराय अनामिकाभ्यां नमः ।
सहस्रकिरणाय कनिष्ठिकाभ्यां नमः । मार्ताण्डाय करतलकरपृष्ठाभ्यां नमः ।

आदित्याय हृदयाय नमः । अर्काय शिरसे स्वाहा ।
दिवाकराय शिखायै वषट् । प्रभाकराय कवचाय हुम् ।
सहस्रकिरणाय नेत्रत्रयाय वौषट् । मार्ताण्डाय अस्त्राय फट् ।
भूर्भुवः सुवरोमिति दिग्बन्धः ॥

ध्यानम् ।
ध्यायेत् सूर्यमनन्तशक्तिकिरणं तेजोमयं भास्वरं
भक्तानामभयप्रदं दिनकरं ज्योतिर्मयं शङ्करम् ।
आदित्यं जगदीशमच्युतमजं त्रैलोक्यचूडामणिं
भक्ताभीष्टवरप्रदं दिनमणिं मार्ताण्डमाद्यं शुभम् ॥ १ ॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
पञ्चब्रह्ममयाकाराः येन जाता नमामि तम् ॥ २ ॥

कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः ।
जन्ममृत्युजराव्याधिसंसारभयनाशनः ॥ ३॥

ब्रह्मस्वरूप उदये मध्याह्ने तु सदाशिवः ।
अस्तकाले स्वयं विष्णुस्त्रयीमूर्तिर्दिवाकरः ॥ ४॥

एकचक्रो रथो यस्य दिव्यः कनकभूषितः ।
सोऽयं भवतु नः प्रीतः पद्महस्तो दिवाकरः ॥ ५॥

पद्महस्तः परञ्ज्योतिः परेशाय नमो नमः ।
अण्डयोने कर्मसाक्षिन्नादित्याय नमो नमः ॥ ६॥

कमलासन देवेश कर्मसाक्षिन्नमो नमः ।

धर्ममूर्ते दयामूर्ते तत्त्वमूर्ते नमो नमः ॥ ७॥

सकलेशाय सूर्याय सर्वज्ञाय नमो नमः ।
क्षयापस्मारगुल्मादिव्याधिहन्त्रे नमो नमः ॥ ८॥

सर्वज्वरहरं चैव सर्वरोगनिवारणम् ।
स्तोत्रमेतच्छिवप्रोक्तं सर्वसिद्धिकरं परम् ॥ ९॥

सर्वसम्पत्करं चैव सर्वाभीष्टप्रदायकम् ॥ १०॥

इति सूर्यस्तोत्रं सम्पूर्णम् ।

॥ सूर्यस्तोत्रं श्रीयाज्ञवल्क्यकृतम् ॥

॥ श्रीगुरुभ्यो नमः॥

॥ ॐ श्रीमहागणाधिपतये नमः ॥

ॐ नमो भगवते आदित्यायाखिलजगतां आत्मस्वरूपेण कालस्वरूपेण चतुर्विधभूत-निकायानां ब्रह्मादिस्तम्भ-पर्यन्तानां अन्तर्हृदयेषु बहिरपि चाकाश इव उपाधिनाऽव्यवधीयमानो भवानेक एव क्षणलव-निमेषावयवोपचित-संवत्सरगणेन अपा-मादान-विसर्गाभ्यां इमां लोकयात्रां अनुवहति ॥ १

यदुह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनं अहरहः आम्नायविधिना उपतिष्ठमानानां अखिल-दुरित-वृजिनबीजावभर्जन भगवतः समभिधीमहि तपनमण्डलम् ॥ २

य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मन-इन्द्रियासुगणान् अनात्मनः स्वयमात्मा अन्तर्यामी प्रचोदयति ॥ ३

य एवेमं लोकं अतिकराल-वदनान्धकार-संज्ञा-जगरग्रह-गिलितं मृतकमिव विचेतनं अवलोक्य अनुकम्पया परमकारुणिकः ईक्षयैव उत्थाप्य अहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयति अवनिपतिरिव असाधूनां भयमुदीरयन्नटति ॥ ४

परित आशापालैः तत्र तत्र कमलकोशाञ्जलिभिः उपहृतार्हणः ॥ ५

अथह भगवन् तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितं अहं अयातयामयजुःकामः उपसरामीति ॥ ६

एवं स्तुतः स भगवान् वाजिरूपधरो हरिः ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥ ७

॥ इति श्रीमद्भागवते द्वादशस्कन्धे श्रीयाज्ञवल्क्यकृतं श्रीसूर्यस्तोत्रं सम्पूर्णम् ॥

॥ सूर्यस्तोत्रम् ३ ॥
देवा ऊचुः
नमस्ते ऋक्स्वरूपाय सामरूपाय ते नमः ।
यजुःस्वरूपरूपाय साम्नान्धामवते नमः ॥ १॥

ज्ञानैकधामभूताय निर्धूततमसे नमः ।
शुद्धज्योतिःस्वरूपाय विशुद्धायामलात्मने ॥ २॥

वरिष्ठाय वरेण्याय परस्मै परमात्मने ।
नमोऽखिलजगद्व्यापिस्वरूपायात्ममूर्तये ॥ ३॥

इदं स्तोत्रवरं रम्यं श्रोतव्यं श्रद्धया नरैः ।
शिष्यो भूत्वा समाधिस्थो दत्त्वा देयं गुरोरपि ॥ ४॥

न शून्यभूतैः श्रोतव्यमेतत्तु सफलं भवेत् ।
सर्वकारणभूताय निष्ठायै ज्ञानचेतसाम् ॥ ५॥

नमः सूर्यस्वरूपाय प्रकाशात्मस्वरूपिणे ।
भास्कराय नमस्तुभ्यं तथा दिनकृते नमः ॥ ६॥

शर्वरीहेतवे चैव सन्ध्याज्योत्स्नाकृते नमः ।
त्वं सर्वमेतद्भगवन् जगदुद्भ्रमता त्वया ॥ ७॥

भ्रमत्याविद्धमखिलं ब्रह्माण्डं सचराचरम् ।
त्वदंशुभिरिदं स्पृष्टं सर्वं सञ्जायते शुचि ॥ ८॥

क्रियते त्वत्करैः स्पर्शाज्जलादीनां पवित्रता ।
होमदानादिको धर्मो नोपकाराय जायते ॥ ९॥

तावद्यावन्न संयोगि जगदेतत् त्वदंशुभिः ।
ऋचस्ते सकला ह्येता यजूंष्येतानि चान्यतः ॥ १०॥

सकलानि च सामानि निपतन्ति त्वदङ्गतः ।
ऋङ्मयस्त्वं जगन्नाथ ! त्वमेव च यजुर्मयः ॥ ११॥

यतः साममयश्चैव ततो नाथ ! त्रयीमयः ।
त्वमेव ब्रह्मणो रूपं परञ्चापरमेव च ॥ १२॥

मूर्तामूर्तस्तथा सूक्ष्मः स्थूलरूपस्तथा स्थितः ।
निमेषकाष्ठादिमयः कालरूपः क्षयात्मकः ।
प्रसीद स्वेच्छया रूपं स्वतेजः शमनं कुरु ॥ १३॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
वैवस्वतोत्पत्तिर्नामाष्टसप्ततितमोऽध्यायान्तर्गता
सूर्यस्तुतिः समाप्ता ॥